श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्री पार्थसारथेः सूनुना देशिकदासेन रचितम्

# ॥ श्री आपमाना रङ्गनाथाष्टकम् ॥

**(A stotram on *Śrī Raṅganātha* of Pomona, New York, USA)**

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# ॥ श्री आपमाना रङ्गनाथाष्टकम् ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

अमरीकैक्यराज्येषु नवयार्कं वरं स्मृतम्।
आपमानेति विख्याता राज्येऽस्मिन् नगरी वरा॥ १ ॥

रमाऽऽपो विलसन्त्यत्र रङ्गश्रीवाहकाः सदा।
रमाऽऽपमानाक्षेत्रस्थो भासते रङ्गभूपतिः॥ २ ॥

रमाऽऽपां चलनं यद्वत् अटलान्तिकसंमुखम्।
तद्वद्रमाऽऽपमानाया मार्गे गच्छन्ति साधवः॥ ३ ॥

कावेरीं रङ्गभूमिं च चोळदेशं तथैव च।
न त्यजन्नपि रङ्गेशः कथञ्चित्प्राप्तवानिह॥ ४ ॥

शेषशय्यासनं भद्रं पूर्वमेव सुकल्पितम्।
विमाने प्रणवाकारे सुन्दरे रङ्गमन्दिरे॥ ५ ॥

दिशि पूर्वे गता दृष्टिः किञ्चिदूर्ध्वं महात्मनः।
आकाशदर्पणे मेघे दृश्यते किं विभीषणः॥ ६ ॥

वेदान्तदेशिकयतेः नारायणमुनेरपि।
अनुग्रहादिह प्राप्तौ श्रीरङ्गदिव्यदंपती॥ ७ ॥

शठकोपमुखैः श्रीवण्शठकोपैः सुसेवितौ।
श्रीरङ्गनाथचरणौ प्रपद्ये शरणं सदा॥ ८ ॥

॥ फलश्रुतिः ॥

रमातीर्थविभोः पादपङ्कजेऽर्पितमष्टकम्।
यः पठेत्तस्य सिद्धिः स्यात् सर्वकार्येषु सर्वदा॥

॥ इति श्री आपमाना रङ्गनाथाष्टकं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः॥